# Document Information

Text title : maNikarNikaashhTakaM Hymn to River Manikarnika
File name : manikarnika8.itx
Category : aShTaka
Location : doc_devii
Author : Popular stotra
Language : Sanskrit
Subject : philosophy/hinduism
Transliterated by : Savithri D. savdev at hotmail.com
Proofread by : Savithri D. savdev at hotmail.com
Latest update : June 14, 2000
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ मणिकर्णिकाष्टकम् ॥

## ॥ मणिकर्णिकाष्टकम् ॥

त्वत्तीरे मणिकर्णिके हरिहरौ सायुज्यमुक्तिप्रदौ
वादन्तौ कुरुतः परस्परमुभौ जन्तोः प्रयाणोत्सवे ।
मद्रूपो मनुजोऽयमस्तु हरिणा प्रोक्तः शिवस्तत्क्षणात्
तन्मध्याद्भृगुलाञ्छनो गरुडगः पीताम्बरो निर्गतः ॥ १॥

इन्द्राद्यास्त्रिदशाः पतन्ति नियतं भोगक्षये ये पुन
र्जायन्ते मनुजास्ततोपि पशवः कीटाः पतङ्गादयः ।
ये मातर्मणिकर्णिके तव जले मज्जन्ति निष्कल्मषाः
सायुज्येऽपि किरीटकौस्तुभधरा नारायणाः स्युर्नराः ॥ २॥

काशी धन्यतमा विमुक्तनगरी सालङ्कृता गङ्गया
तत्रेयं मणिकर्णिका सुखकरी मुक्तिर्हि तत्किङ्करी ।
स्वर्लोकस्तुलितः सहैव विबुधैः काश्या समं ब्रह्मणा
काशी क्षोणितले स्थिता गुरुतरा स्वर्गो लघुत्वं गतः ॥ ३॥

गङ्गातीरमनुत्तमं हि सकलं तत्रापि काश्युत्तमा
तस्यां सा मणिकर्णिकोत्तमतमा येत्रेश्वरो मुक्तिदः ।
देवानामपि दुर्लभं स्थलमिदं पापौघनाशक्षमं
पूर्वोपार्जितपुण्यपुञ्जगमकं पुण्यैर्जनैः प्राप्यते ॥ ४॥

दुःखाम्भोधिगतो हि जन्तुनिवहस्तेषां कथं निष्कृतिः
ज्ञात्वा तद्धि विरिञ्चिना विरचिता वाराणसी शर्मदा ।
लोकाःस्वर्गसुखास्ततोऽपि लघवो भोगान्तपातप्रदाः
काशी मुक्तिपुरी सदा शिवकरी धर्मार्थमोक्षप्रदा ॥ ५॥

एको वेणुधरो धराधरधरः श्रीवत्सभूषाधरः
योऽप्येकः किल शङ्करो विषधरो गङ्गाधरो माधवः ।
ये मातर्मणिकर्णिके तव जले मज्जन्ति ते मानवाः
रुद्रा वा हरयो भवन्ति बहवस्तेषां बहुत्वं कथम् ॥ ६॥

त्वत्तीरे मरणं तु मङ्गलकरं देवैरपि श्लाघ्यते
शक्रस्तं मनुजं सहस्रनयनैर्द्रष्टुं सदा तत्परः ।
आयान्तं सविता सहस्रकिरणैः प्रत्युग्दतोऽभूत्सदा
पुण्योऽसौ वृषगोऽथवा गरुडगः किं मन्दिरं यास्यति ॥ ७॥

मध्याह्ने मणिकर्णिकास्नपनजं पुण्यं न वक्तुं क्षमः
स्वीयैरब्धशतैश्चतुर्मुखधरो वेदार्थदीक्षागुरुः ।
योगाभ्यासबलेन चन्द्रशिखरस्तत्पुण्यपारङ्गतः
त्वत्तीरे प्रकरोति सुप्तपुरुषं नारायणं वा शिवम् ॥ ८॥

कृच्छैर् कोटिशतैः स्वपापनिधनं यच्चाश्वमेधैः फलं
तत्सर्वे मणिकर्णिकास्नपनजे पुण्ये प्रविष्टं भवेत् ।
स्नात्वा स्तोत्रमिदं नरः पठति चेत्संसारपाथोनिधिं
तीर्त्वा पल्वलवत्प्रयाति सदनं तेजोमयं ब्रह्मणः ॥ ९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ
मणिकर्णिकाष्टकं सम्पूर्णम् ॥



.. Hymn to River Manikarnika ..
was typeset on April 10, 2015

Please send corrections to *sanskrit@cheerful.com*